श्रीगणेशायनमः नांदीमुखदिनेप्रदोषशांत्यर्थमुदकशांति प्रति
सरबंधौकुर्यात्। तत्रविशेषः। करिष्यमाणक्रतुसंरक्षणा
१ र्थं कर्मांगभूत प्रति सर बंधं करिष्य इति संकल्प्य। शुचौदे
शेपूर्ववत्स्थंडिलस्यासमंताद्ब्राह्मणानाचम्योपविशयेत्। त
चा त्रैकमार्यत्वेन वृणुयात्। अन्यान्पूर्ववत्प्रतिदिशं जपकर्तृ
त्वेन। अथाचार्यस्य हस्तेन कुर्वीत स्थंडिलं समं। सैकतं च
तुरस्रंच भवेत्प्राग्वत्सदर्भकं। लेखादि पूर्ववदाचार्यः। कु
र्यात्। पात्रासादनेविशेषः। रौलेयतंदुलान्क ९ संस्थाप

येत्संपफलान्शुभान्। नवतंतुमयंसूत्रं गंधाढ्यं तत्रविन्यसे
त्। प्रोक्षणमप्येतस्य स्थंडिलमध्ये प्रागग्रेषु कुशेष्वाधीय
तांघटः। पूरयेच्छुद्धतोयैस्तन्मंत्रैर्व्याहृतिभिस्तथा। प
रिस्तरणं पूर्ववत्। देवस्यत्वेति पुरस्तादित्यादि तिरःप
ति वित्रंनिधाय। व्याहृतिभिजलमानयति। तैरेवयवान्। दूर्वा
क्षतफलेरवकीर्य गंधादिरथार्चयेत्। पूजनानंतरं कुशै
र्दूर्वाभिः त्र्यचाभ्याभिमृश्य छंनोदेवीति। ततः सर्वे प्राणा
यामत्रयं कृत्वा लभ्यजपंति ते। गायत्रीं छंदसामादिनुवा

करुणुष्व च। अग्ने यशस्विन्नित्यादि चतुष्टयमृचां ततः।
हिरण्यवर्णाः शुचयः पावका यासु जातः कश्यपो यास्विन्द्रः। अग्निं
या गर्भं दधिरे विरूपास्तान आपः शꣳ स्योना भवंतु। यासाꣳ रा
जा वरुणो याति मध्ये सत्यानृते अवपश्यं जनानां। मधुश्चुतः शु
चयो याः पावकास्ता०। यासां देवा दिवि कृण्वंति भक्षं या अंत
रिक्षे बहुधा भवंति। याः पृथिवीं पयसोंदंति शुक्रास्ता०। शिवे
न मा चक्षुषा पश्यतापः शिवया तनुवोप स्पृशत त्वचं मे। स
र्वाꣳ अग्नीꣳ रप्सुषदो हुवे वो मयि वर्चो बलमोजो निधत्त। य

द्दः संप्रयतीरदावनतदा हते। तस्मादा नद्यो नाम स्थ ता वो
नामानि सिंधवः। यत्प्रेषिता वरुणेन ताः शीभꣳ समवल्ग
त। तदाप्नोदिंद्रो वो यतीस्तस्मादापो अनु ष्ठन। अपकामꣳ
स्यंदमाना अवीवरत वो हि कं। इंद्रो वः शक्तिभिर्देवीस्तस्मा
द्वार्णाम वो हितं। एको देवो अप्यतिष्ठत्स्यंदमाना यथावशं।
उदानिषुर्मही रिति तस्मादुदकमुच्यते। आपो भद्रा घृतमि
दाप आसुरग्नीषोमौ बिभ्रत्याप इत्ताः। तीव्रो रसो मधुपृचा
मरंगम आ मा प्राणेन सह वर्चसा गंन्। आदित्पश्याम्युत वा

रश्मिभ्यामाघोषेण क्षत्रियाऽआसां। मन्ये भिजानो अमृतस्य तर्हि हिरण्यवर्णा अतर्पयु दाव्यः। आपोहिष्ठेति त्र्यृच। दिविश्रयस्वांतरिक्षे यतस्व पृथिव्या संभव ब्रह्मवर्चसमसि ब्रह्मवर्चसाय त्वा। पवमानः सुवर्जनः। पवित्रेण विचर्षणिः। यः पोता स पुनातु मा। पुनंतु मा देवजनाः। पुनंतु मनवो धिया। पुनंतु विश्व आयवः। जातवेदः पवित्रवत्। पवित्रेण पुनाहि मा। शुक्रेण देवदीद्यत्। अग्ने क्रत्वा क्रतूꣳरनु। यत्ते पवित्रमर्चिषि। अग्ने विततमंतरा। ब्रह्म तेन पुनीमहे। उभाभ्यां देवसवितः। पवित्रेण सवेन च। इदं ब्रह्म पुनीमहे। वैश्वदेवी पुनती देव्यागात्। यस्यै बह्वीस्तनुवो वीतपृष्ठाः। तया मदंतः सधमाद्येषु। वयꣳ स्याम पतयो रयीणां। वैश्वानरो रश्मिभिर्मा पुनातु। वातः प्राणेनेषिरो मयोभूः। द्यावापृथिवी पयसा पयोभिः। ऋतावरी यज्ञिये मा पुनीतां। बृहद्भिः सवितस्तृभिः। वर्षिष्ठैर्देवमन्मभिः। अग्ने दक्षैः पुनाहि मा। येन देवा अपुनत। येनापो दिव्यंकशः। तेन दिव्येन ब्रह्मणा। इदं ब्रह्म पुनी

४

महे। यः पावमानीरध्येति। ऋषिभिः संभृत ँ रसं। सर्व ँ
सपूतमश्नाति। स्वदितं मातरिश्वना॥ पावमानीर्यो अध्ये
ति। ऋषिभिः संभृत ँ रसं। तस्मै सरस्वती दुहे। क्षीर ँ
सर्पिर्मधूदकं। पावमानी स्वस्त्ययनीः। सुदुघाहि पयस्वतीः।
ऋषिभिः संभृतोरसः। ब्राह्मणेष्वमृत ँ हितं। पावमानी
र्दिशंतु नः। इमं लोकमथो अमुं। कामांत्समर्धयंतु नः। दे
वीर्देवैः समाभृताः। पावमानी स्वस्त्ययनीः। सुदुघाहि घृत
श्चुतः। ऋषिभिः संभृतो रसः। ब्राह्मणेष्वमृत ँ हितं।

येन देवाः पवित्रेण। आत्मानं पुनते सदा। तेन सहस्रधारेण। पाव
मान्यः पुनंतु मां। प्राजापत्यं पवित्रं। शतोद्याम ँ हिरण्मयं। तेन
ब्रह्मविदो वयं। पूतं ब्रह्म पुनीमहे। इंद्रः सुनीती सह मा पुनातु।
सोमः स्वस्त्या वरुणः समीच्या। यमो राजा प्रमृणाभिः पुनातु मा।
जातवेदा मोर्जयंत्या पुनातु। भूर्भुवः स्वः। तच्छंयोरावृणीमहे।
गातुं यज्ञाय। गातुं यज्ञपतये। दैवी स्वस्तिरस्तु नः। स्वस्तिर्मानु
षेभ्यः। ऊर्ध्वं जिगातु भेषजं। शंनो अस्तु द्विपदे। शं चतुष्पदे।
नमो ब्रह्मणे। नमो अस्त्वग्नये नमः पृथिव्यै नम ओषधीभ्यः।

५

नमोवाचेनमो॥ वाचंस्पतये नमो विष्णवे बृहते करोमि। एवं
पुनर्द्विवारं। ॐ इत्युत्थाय। ॐ भूर्भुवः सुवरिति संस्कार्यं प्रो

४२

क्षंति। अथ यजमानः। ऋत्विग्भ्यः प्रागादि प्रादक्षिण्येन हिरण्यं
रजतं कं स्वं चास इति ददाति। एवं ज्वरादिगृहीतानां भूतो
पसृष्टानां मित्रबंधुसुहृज्ज्ञातिसंबंधिबांधवानां च बालवृ
द्धगर्भिणी पापरोग दीर्घरोगी कृशातुराणां हस्त्यश्वखरोष्ट्र
गोमहिष्यजाविक भृत्यानां च प्रोक्षणं। एकरात्रं त्रिरात्रं स
प्तरात्रं वोदकशांतिं कुर्यात्। अपमृत्युपरिहारार्थमपि कु

विश्वाक्षामहे अति दुरिताग्निः। हिरण्यवर्णां हरिणीं सुवर्णरजतस्र
जां। चंद्रां हिरण्मयीं लक्ष्मीं जातवेदो ममावह। तां म आवह जात
वेदो लक्ष्मीमनपगामिनीं। यस्यां हिरण्यं विंदेयं गामश्वं पुरुषान
हं। नमो ब्रह्मण इति त्रिरनूच्य समापयेत्। प्रणवेनोत्थाप्य। व्याहृ
भिः सुरभिमत्यार्लिंगाभिः स्तृत्रे यजमानं पत्नीं च प्रोक्षति। भूर्भु
वः सुवः। दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः। सुर

२

भिनो मुखाकरत्प्रण आयूंषि तारिषत्। आपो हिष्ठा मयोभुव
स्ता न ऊर्जे दधातन। महे रणाय चक्षसे। आदाय वासुकीं ध्या

८

त्वाग्रह्णीया दक्षिणं करं। यस्य कुर्मस्तत स्याग्निरायुष्मानादि
पंचभिः। बृहत्सामेति बध्नीया स्त्रीणां वामकरे तथा। बृहत्सा
मक्षत्रभृयं त्रिष्टुभौजः शुभितमुग्रवीरं। इंद्रस्तोनपंचदशे
न मध्यामिदं वातेन सगरेण रक्ष। त्रियंबकमिति त्रिभिर्भस्मना सं
मृज्य। स्त्रीणां बंधने तूष्णीं। त्वायुष्मतीं करोमीति। द्विजेभ्यो दक्षि
णां दद्यात्। आचार्यविरहे कर्ता गुरुरध्वर्युरेव वा। आयुष्मती
मिति ह्याहुरूहमहविदस्त्रियाः। रूतोप्यहत एवस्यादधिकारी
न चेत्पत्नी। तस्मादनधिकारेण नप्रमायं कथंचन। नश्रोत्रियस्य
यज्ञस्यो श्रोत्रियो वेदपारगः। घृतसूक्तेन रक्षां कुर्यात्। योब्रह्मा

मे

ब्रह्मण उज्जभार प्राणेश्वरः कृत्तिवासाः पिनाकि। ईशानो देवः
सन आयुर्दधातु तस्मै जुहोमि हविषा घृतेन। विभ्राजमानः से
रिरंध्या द्रोचमानो घर्मं रुचिर्य आगात्। मृत्युपानपनुद घोरा
निह्यायुषे नो घृतमन्नु देवाः। ब्रह्मज्योतिर्ब्रह्मपत्नीषु गर्भं यमादधा
त्पुरुरूपं जयंतं। सुवर्णरंभं ग्रहमर्च्यं तमायुषे वर्धयामो घृतेन।
श्रियं लक्ष्मीमौपलां अंबिकां गां षष्ठीं जयामिंद्रसेने त्युदाहुः।
तां विद्यां ब्रह्मयोनिं स्वरूपामिहायुषे तर्पयामो घृतेन। दी
क्षायण्यः सर्वयोन्यः स्वयोन्यः सहस्रशो विश्वरूपा विरू
पाः। ससूनवः सपतयः सयूथ्या आयुषेणो घृतमिदं जुषंतां।

स्याम

स श्री

कर्म

दिव्यागणाबहुरूपाः पुराणा आयुश्छिंदोनः प्रमुसंतुवीरान। त
भ्योजुहोमि बहुधाघृतेनमानः प्रजाः रीरिषोमोत वीरान। ए
कः पुरस्ताद्य इदंबभूवयतोबभूवभुवनस्यगोपाः। यमप्येति
भुवनः सांपरायेसनोहविर्घृतमिहायुषेतुदेवाः। वसून्रुद्रा
नादित्यान्मरुतोथसाध्यान्रृभून्यक्षान्गंधर्वांश्चपितृंश्चवि
श्वान। भृगून्सर्पांश्चांगिरसोथसर्वान। घृतंहुत्वास्वायुष्मह
यामिशश्वत्। इत्यादीनपिदेवगणान्स्मरेत। एतस्मिंस्तंतरा
यजातंनैवभवतीत्याह भगवान्बौधायनः। इतिप्रतिसरबंध
समाप्तः। स्थानेसुपनामक सदाशिवभटस्येदंपुस्तकंलिखितं।

प्रा